तिरुमलतिरुपतिदेवस्थानम्

# बाल सप्तगिरिः

सचित्रमासपत्रिका

जून् २०२०

सप्तगिरि अनुबंधम्



तिरुमल श्रीस्वामिपुष्करिणी समीपस्थित अलाये
श्रीवराहस्वामी



श्री वादिराजस्वामिनं
अनुकुर्वन् बालकळाकारः

सम्पुटिः-०१ सञ्चिका-४

सप्तगिरि अनुबन्धम्

तिरुमलतिरुपतिदेवस्थानानि

# बालसप्तगिरिः

## जून् -२०२०

## विषयसूचिका



मुखचित्रम् - श्रीवराहस्वामीनः तिरुमल

अन्तिमरक्षापुटः - श्री पेरियाल्वार् चित्रम्

हिन्दू देवताः

# वराहावतारम्

- एन्.उमादेवी



महाविष्णुः प्रतिकल्पे अनुकूलैः रूपैः जगत् पालयति। अतः अस्मिन् कल्पे श्वेतयज्ञवराहरूपं धृतवान्। श्रीमन्नारायणः भूलोके वराहरूपेण विहरन् स्वपूर्वनियतावासे वेङ्कटाचले न्यवसत्। दामोदरः स्वामिपुष्करिणीतीरे चिरं विहरन् परमया भक्त्या युक्तं चतुर्मुखमपश्यत्। ब्रह्मा लोकरक्षकं नारायणं दृष्ट्वा "स्वामिन् अनादिं दिव्यं निजस्वरूपं धर" इत प्रार्थितवान्। एवं प्रार्थितस्य ब्रह्मणः प्रार्थनानुसारं वराहरूपं त्यक्त्वा अनितरसाध्यं स्वं सर्वव्यापकशरीरं प्राप। कदाचित् नारदः श्रीमहाविष्णुं द्रष्टुं क्षीरसागरं गतवान्, दर्शनं प्राप्तवान्। तदा श्रीहरिः नारदं प्रति 'हे नारद! ब्रह्माण्डे कुत्र वा मम निवासयोग्यं विहारयोग्यं च स्थानं वर्तते? कथय इत्यब्रवीत्। नारदः तिरुमलक्षेत्रं वासयोग्यं रमणीयं स्थानमिति समाधत्तवान्। तदा वराहस्वामी आदिशेषमुद्दिश्य एवमुक्तवान् - 'अहं अत्र क्रीडाद्रौ रमया सह निवसितुमिच्छामि। अतः हे अनन्त! त्वं शेषपर्वतरूपं धृत्वा अत्र भूतले वसतु'। भगवतः आदेशानुसारं आदिशेषः शेषाचलरूपं धृतवान्। अयं विषयः ब्रह्माण्डपुराणेऽपि निरूपितः चतुर्भजं, उन्नतशरीरं, वराहवदनं, शङ्खचक्राभयमुद्राः दधानं पुरुषोत्तमं, पीताम्बरधरं, पद्मपत्रायतेक्षणं, पूर्णचन्द्रनिभाननं, धूपगन्धिमुखाम्बुजं, सामध्वनिं, यज्ञमूर्तिं, सुङ्खं, सुवनासिकं, क्षीरसागरसमानं, किरीटोज्ज्वलिताननं, श्रीवत्सवक्षसं, यज्ञोपवीतिनं, कौस्तुभश्रिया दीप्यमानं समुन्नतमहोरसं, वामपादतलाक्रान्तपादपीठं, कटकाङ्गदकेयूरकुण्डलोज्ज्वलितं, ब्रह्मावसिष्ठात्रि मार्कण्डेय भृग्वादिभिरनेकैर्मुनीन्द्रैः नक्तन्दिवं सेव्यामानं, इन्द्रादिलोकपालैः गन्धर्वाप्सरसां गणैः सेवितं देवदेवं वराहस्वामिनं

अभिगम्य नमस्कृत्य दिव्यैरुपनिषद्धागैः भूम्युद्धारकं भगवन्तं संस्तूय परमप्रीतः नारदः देवस्य समक्षे स्थितः। वन्दमानां भूदेवीं दृष्ट्वा प्रीतिविकसितनेत्रः वराहस्वामी तां उद्धृत्य स्व बाहुभिः आलिंलिङ्ग। भूदेवीमुखं प्रेम्णा आघ्राय वामाङ्के उपवेश्य च गरुत्मन्तमधिष्ठाय वृषभाचलं जगाम। सर्वलोकपूजिते स्वामिपुष्करिणीतीरस्य पश्चिमे ततः प्रभृति नारदादि मुनीन्द्रैः, वैखानसमुनिश्रेष्ठैः ब्रह्मतुल्यैः महात्मभिः वराहस्वामी पूजितः आसीत्। वराहस्वामी शेषाचलस्य क्षेत्रपालः स्यात्। श्रीवेङ्कटेश्वरः स्वस्य निवासाय स्वामिपुष्करिण्याः दक्षिणदिशि किञ्चित् स्थलं वराहस्वामिनं ययाचे। तदर्थं भगवतः वराहदेवस्य प्रथमदर्शनपूजानैवेद्यादिकानि निर्वर्तयितुं श्रीनिवासः अङ्गीचकार इति भविष्योत्तरपुराणे प्रतिपादितः। नारायणाद्रौ निवसन्तं रक्तपद्मायतेक्षणं भूभर्तारं वराहस्वामिनं सखिभिर्वृता भूदेवी नमस्कृत्य परिपप्रच्छ। स्वामिन्! भवान् केन मन्त्रेण आराध्यः प्रीतो भविष्यति? भवतः सदा कः प्रीतिपात्रः? कस्य मन्त्रस्य जपतां सर्वसम्पत्तिकारकं, पुत्रपौत्रदं, सार्वभौमत्वदं, कामिनां कामदं, कः मन्त्रः अन्ते त्वत्परमपदं ददाति। एवम्भूतं मयि प्रीत्या वदेति भूदेव्या पृष्टः वराह स्वामी मन्दस्मितवदनः एवं प्रोक्तवान्।

परमं गुह्यं सद्यः सम्पत्प्रदायकं, भूमिदं, पुत्रदं, कदाचन अप्रकाश्यं श्रुणु। एषः मन्त्रः जितेन्द्रियाय, शुश्रूषवे, भक्तायैव वाच्यं, 'ओं नमः श्रीवराहाय धरण्युद्धरणाय वह्निजाय समायुक्ताय नमः'' इति मन्त्रः मुमुक्षुभिः सदा जपितव्यः। अयं मन्त्रः सर्वसिद्धिप्रदायकः। अस्य मन्त्रस्य ऋषि सङ्कर्षणः, देवतात्वहमेव। छन्दः पङ्क्तिः, श्रीबीजमिति समाख्यातम्। सद्गुरोः मन्त्रोपदेशं प्राप्य चतुर्लक्षं तन्मन्त्रं जपेत्। मधुसर्पिः समन्वितं पायसान्नं जुहुयात्। अथ मनोनैर्मल्यप्रदं ध्यानं प्रवक्ष्यामि। ''शुद्धस्फटिकशैलाभं अरविन्ददलायताक्षं, वराहमुखं, सौम्यरूपं, चतुर्भुजं, किरीटिनं, श्रीवत्सवक्षसं,'' शङ्खचक्राभयबाहुं, भूदेवि! वामोरु स्थितया त्वया युक्तं, रक्तपीताम्बरधरं रक्ताभरणभूषितं, श्रीकूर्मपृष्ठमध्यस्थशेषमूर्त्यब्जसंस्थितं मां ध्यात्वा मन्त्रं सदा अष्टोत्तरशतवारं जपेत्। एवं कृत्वा सर्वान् कामानवाप्य शरीरवसाने ध्रुवं मोक्षं लभेत्।



# तिरुमळिसैक्षेत्रतदधीशदिव्यसूर्योश्च दिव्यनामप्रप्तिवैभवम्

- केशवप्रपन्न पांडे

**द्वादश सूरयः**

यानि कानि च पुण्याणि क्षेत्राणि धरणीतले।
तुलां नार्हन्त्यनेनेति तन्महीसारमुच्यते।।
मखायां मकरे मासे चक्रांशं भार्गवोद्भवम्।
महीसारपुराधीशं भक्तिसारमहं भजे।।

अथ कदाचिद्दिव्यमहर्षयोऽत्रिभृगुवसिष्ठाङ्गिरसप्रमुखा ऋषयः पितामहं चतुर्मुखमेत्य भूम्यामस्यां तपश्चरणायोत्तमं क्षेत्रं किमिति ज्ञातुकामाः किञ्चन श्रेष्ठं शीघ्रफलप्रदायि च दिव्यक्षेत्रे पप्रच्छुः। श्रुत्वा च तेषामिमानि शुभानि वचनान्यान्दितो विधाता कमप्युपायं चिन्तयित्वा सद्यस्ततो देवशिल्पीं विश्वकर्माणं चाहूय तत्साहाय्येन च तुलामेकामादाय तुलायास्तस्या एकस्मिन्भागे शैलवनादिसहितं समस्तभूभागमपरस्मिन् च भागे सर्वलोकक्षेमङ्करं सदा दिव्यर्षिभिराचतरिततपोभिः पवित्रीकृतञ्च विदेहभवनक्षेत्रमित्याख्यातं ''तिरुमळिसै'' नामकं दिव्यक्षेत्रमारोप्य तोलयामास। परं तत आश्चर्यमयं दृश्यं ददृशुस्तत्रोपस्थितास्समेऽपि ऋषयो यद् यस्यान्तु घटायां ''तिरुमळिसै'' इत्याख्यं क्षेत्रमारोपितमासीत् तत्तूपरि नोत्तस्थौ, परमन्यस्यां घटायान्तु यानि कान्यप्यितराणि समस्तानि भूक्षेत्राणि स्थापितान्यासन् तान्युत्तस्थुः। तदा तद्दर्शनेन विस्मयान्वितो विधाता ''तिरुमळिसै'' इति क्षेत्रं भूमेः सारतमं महत्पुण्यभूभागमिति परिज्ञाय तस्य ''महीसारक्षेत्र'' मिति दिव्यं नाम विदधे। ''जातौ जातौ हि यच्छ्रेष्ठं तद्रत्नमित्यभिधीयते'' इत्युक्तप्रकारेण मह्या अस्या रत्नसदृशम् अर्थात् सारतमं दिव्यक्षेत्रमिदं नित्यभगवदाराधनसुगन्धितम् अद्यापि महीसारक्षेत्रत्वेन प्रसिद्धिं प्राप्य नितरां राराजते। श्रूयते ह्येतद्विषयकं प्रशस्तपद्यमिदं यथा -




यानि कानि ..................
तन्महीसारमुच्यते।।

अतीतेषु च बहुषु हायनेषु कदाचित् भृगुमहर्षौ भगवन्तं श्रियः पतिं श्रीमन्नारायणं तत्रैव

महीसारक्षेत्रे पारमैकान्त्यधर्मेणाराधितवति सति तद्धर्मपत्नी देवी कनकाङ्गी अन्तर्वत्नी बभूव। द्वापरेऽतीतेषु चानेकलक्षसंवत्सरेषु, सिद्धार्थनाम्नि पुण्याब्दे, मकरमासे, मखानक्षत्रयुक्ते भानुवासरे, कृष्णपक्षप्रतिपत्तिथौ च सा देवी भगवतः सुदर्शनस्यांशभूतं पिण्डाकृतिं कञ्चन तेजोमयं महापुरुषं प्रसूतवती। प्रथमे ''तिरुमळिसैप्पिरान्'' इति प्रथितः कालान्तरे स एव महापुरुषः स्वकीयातिमानुषेन वैभवेन ''भक्तिसार'' इति नाम्ना प्रसिद्धिङ्गतः। तदवतरणविषये उक्तञ्च दिव्यसूरिचरिते यथा -

**सा गर्भमाधत्त .......................महनीयतारे।।**

जयन्तीमालायाञ्च यथा -

**सिद्धार्थिन्युष्णरश्मौ .................. पर्वणोऽन्येद्युरत्र।।**

परं शिश्नाकृतिरहितं गर्भाशयसंश्लिष्टं जातं तत्पिशितपिण्डम् अभिवीक्ष्य भृशं दुःखितौ तत्पितरौ तन्मांसपिण्डमनतिदूरे स्थिते एव कस्मिंश्चित् वेत्रलताकुञ्जे निक्षिप्य यथाप्रदेशं ततो निर्ययतुः। अत्रान्तरे जातकरुणया जगज्जनन्या लक्ष्म्या परिपालितोऽवाप्तसमस्तावयवश्च, शनैः शनैर्वर्धमानः स्तन्यादिभ्यो निवृत्तः, स दिव्यात्मा शिशुस्वाभावगत मलमूत्र रोदनजल्पनक्रियादिरहितः, भगवत्कृपया दिव्यगन्धसुगन्धिगात्रश्च सदा भगवद्गुणामृतसिन्धुनिमग्नो भगवत्कैंकर्यपरो यथानन्दं कालमतिवाहयन् तत्रैव महीसारक्षेत्रे सुखमुवास। प्राप्ते च सप्तमे वयसि स भगवान् ''तिरुमळिसैप्पिरान्'' ऋषिकुमारतया यम नियम-आसन-प्राणयाम-प्रत्याहार-धारण-ध्यान-समाधिरूपैः अष्टाङ्गयोगैः परिपूर्णस्तैरात्मानं नियम्य ध्यानसमाधिभ्याञ्च सदा भगवति निरत आसीत्। परमेकदा वेदप्रतिपाद्यं परं ब्रह्म तदित्थमिति निर्णेतुकामः स दिव्यसूरिः शाक्य-उलूक्य-अक्षपाद-क्षपण-कपिल-पतञ्जलि-शैव-मायावाद-भाट्ट-प्राभाकराद्यखिलमतान् सम्यगधीत्य तदीयान् तत्त्वांश्च परिज्ञातुं सप्तशतवत्सरान् यापयामास। परमन्तिमे तेषां वेदप्रतिपादितयथार्थविषयेऽसमर्थतां श्रुतिविरोधत्वात्तेषामप्रामाणिकताञ्च परिज्ञाय अन्ततो तानपास्य भगवन्तं श्रियःपतिं श्रीमन्नारायणमेव वेदप्रतिपाद्यत्वेन परमं प्रामाणिकं तत्त्वमिति निश्चित्य तमेव शरणं जगाम। भगवान्नारायणोऽपि तदीयनिस्सीमभक्त्या सन्तुष्टो नैजं दिव्यस्वरूपं तस्मै सन्दर्श्य तं महामुनिमनुजग्राह। तद्दर्शनेन च विमोहितो भक्तिसारः तमेव भगवन्तं ध्यानयोगेन सततमनुध्यायन् यावत्सप्तशतवत्सरान् यथानन्दमवात्सीत्।



कन्नड हरिदास वरेण्याः

# श्रीमद्वादिराजतीर्थाः

- विद्वान् वि.प्रदीप् कुमारः

''श्रीशनीनहुदो शेषाचलनीनहुदो'' ''सारिदे निन्न वेङ्कट'' ''ताळुविकेगिन्त अन्यतपविल्ल'' ''कुदुरे कण्डिदे चल्व'' इत्यादीनि मधुरातिमधुरानि गीतानि संस्कृत-कन्नड भाषयोः लिखितवन्तः ''श्रीमद्वादिराजतीर्थश्रीपादाः''। एते ''श्रीहयग्रीवोपासकाः''। एतेषां ''हयवदनम्'' इति अङ्कितनाम सुप्रसिद्धम्। पञ्चसु पर्यायेषु उडुपी श्रीकृष्णस्य पूजनम् एतेषां सौभाग्यम्। श्रीनिवासाय ''लक्षाभरणम्'' इति ग्रन्थं समर्पितवन्तः। तस्मिन्प्रसङ्गे एव ''सालग्रामहारम्'' अपि समर्पितमिति प्रतीतिः। ''रुग्मिणीशविजयः'' ''तीर्थप्रबन्धः'' ''युक्तिमल्लिका'' ''सरसभारतीविलासः'' इत्यादि संस्कृतग्रन्थाः तथा कन्नडभाषायां ''देवरनामगण्णुं'' (गीतानि) अपि रचितवन्तः।।



दक्षिणकर्णाटके ''कुम्भाशिन'' इति नगरसमीपस्थ ''हूविनकेरे'' इति ग्रामे ''सरस्वती-रामाचार्यः'' इति दम्पत्योः पुत्रः एकः सञ्जातः। ''भूवराहः'' इति तस्य नाम। ''वागीशतीर्थानां'' सन्निदौ एतेषां सर्वतोमुखाभिवृद्धिः जाता। वागीशतीर्थैः एव सन्यसदीक्षां प्राप्य ''भूवराहः'' ''वादिराजतीर्थः'' सञ्जातः। उडुपी श्रीकृष्णस्य पूजार्थं

नियमितानां ''अष्ठमहानां'' मध्ये ''स्वामी'' मठाधीशाः श्रीवादिराजतीर्थाः। एतेषां जीवने बहु महिमाः प्रदर्शिताः। एकदा एकः स्वर्णकारः गणेश विग्रहं रचयितुं आकृतिरेश्चां निर्मितवान्। परन्तु गणेशाकृतिरेरवय ''हयग्रीवरूपेण'' परिणता। स्वप्ने देवनादर्शनेन तदाज्ञानुसारं स्वर्णकारः तां हयग्रीवप्रतिमां वादिराजतीर्थेभ्यः समर्पितवान्। तदानीमारभ्य संस्थानपूजायां भूवराह-नरसिंह प्रतिमाभिः सह हयवदनस्थापि पूजा समर्पिता। पूजान्तसमये अर्थात् नैवेद्यसमये वादिराजानां पुरतः एकः श्वेताश्वः आविर्भवतिद्वयं। एकस्मिन् बृहत्पात्रे पायसं संस्थाप्य, तत्पात्रं शिरसि धारयतिस्म। तदा स्कन्धेषु पादद्वयं संस्थाप्य अश्वः तत्पामयसं भुक्त्वा गच्छतिस्म।

एवमेव ''पण्डरापुर'' इति ग्रामे वादिराजतीर्थाः हयग्रीव पूजायामसन्। तदा समीपस्थ चणकधान्यक्षेत्रे श्वेताश्वः कृषीवलेन दृष्टः। स च यतीनामेव स्यादितिमत्वा तेषां समीपं गत्वा एवमा वेदनामनिवेदयत् ''श्वेतान्धः चणकधान्यं खादन्नास्ति'' इति। तदा वादिराजतीर्थाः ''तव धान्यं द्विगुणी भवति'' इति उक्त्वा प्रेषितवन्तः। उक्तमौल्यमेकं विग्रहं दृष्टवन्तः। तदा तदाकृतिः विठलाकारेण परिणता। ''अरसप्पनायकः'' इति सामन्तराज्ञः श्वशुरः अकालमरणं प्राप्नोति। तदा वादिराजतीर्थाः ''लक्ष्मीसोभाने'' इति स्तुत्या तं पुनसज्जीवितवन्तः। वादिराजतीर्थानां कन्नडभाषा स्तुतिषु ''कुदुरे कण्डिदे चेल्व कुदुरे कण्डिदे'' इति हयग्रीवसुत्वादि पठनेन अस्माकं श्वेताश्वस्य चित्रं अक्ष्णोः समुल्लसति। एते प्रबोधात्मकगानेन जनसमूहे शान्तिस्थापनं कृतवन्तः। तत्रापि ''ताळुविकेगिन्त अन्यतपविल्ल'' इति इत्यादिभिः ''मूर्खानां'' वचोभिः ताळुविकेगिन्त अन्यतपविल्ल'' इति इत्यादिभिः ''मूर्खानां'' वचोभिः उद्रिक्तः मा भूमान्'', कष्टकाले पराङ्मुरवः न भवेदिति'' सूचितवन्तः। अस्मिन् भूतले १२० वर्षाणि सिद्धन्तस्थापनादि कर्माचरणेन जीवितं समाप्य ''स्वादि'' क्षेत्रे पञ्चवृन्दावनस्थले अन्तर्गताः इव जनाननुगृह्णन्ति।








# पुष्करिणी माहात्म्यम्


तेलुगु मूलम् - श्रीनिवासादीक्षितुलु

संस्कृतानुवादः- प्रियंवदा राघवन्

चित्रम्- के. द्वारकानाथ्


चन्द्रवंशे उत्पन्नः राजा नन्दनः। सः वृध्दावस्थायां प्रविष्टः इति तस्य पुत्राय धर्मगुप्ताय राज्यं दत्त्वा सः तपस्याय रावानदी तीरं गतवान्। एकदा आखेटाय वनं गतः धर्मगुप्तः सिंहस्य प्रहारात् पलायित्वा वृक्षं आरोहति।




भल्लूकः सम्यक् आलोचितवान्। राज्ञा साकं धर्मयुक्तं एकं व्यवस्था कल्पयति।






व्यवस्थानुसारं राजा प्रथमं सुप्तवान्, भल्लूकः यथोक्तं राजानम् अधः पतनात् रक्षयति। तदा वृक्षस्य अधः स्थितः सिंहः भल्लूकम् अवोचत् ....

हे सखे! मां बुभुक्षा बाधते कृपया सुप्तं राजनम् अधः पातयतु अहं खादामि।

हे मृगराजन्! मां यः सम्पूर्णतया विश्वसिति तेन सः विश्वासघातकरणं धर्मः नास्ति। अहं तथा न करोमि। भवान् इतः गच्छतु।



अनन्तरं राजा उत्थितवान्, भल्लूकः निद्राय गतवान् राज्ञः उपरि विश्वासात्। तदा पुनः सिंहः राजानम् पृच्छति...

भल्लूकं पातयतु सः मम आहारः

तथैव मृगराज! अहं भल्लूकं पातयामि।



विना क्षणचिन्तनेन राजा सुप्तं भल्लूकं पातयितुं प्रवर्तयति। परन्तु भल्लूकः झटिति उत्थाय तस्य पटुत्वेन कथञ्चित् विना पतित्वा आत्मानं रक्षति। झटिति भल्लूकः राज्ञः समीपे आगत्य -

हे कृतघ्न! हीन! भवन्तं रक्षितवान् भवतः उपरि विश्वासं च कृतवान्। मया सह एव विश्वासघातं कृतवान् खलु। अतः अस्मै पापाय भवान् उन्मत्तः मतिभ्रष्टः च भविष्यति।

अरे! दोषः आचरितवान् भल्लूक!



धर्मगुप्तः उन्मत्तः भूत्वा विविधदेशान् अटन् आसीत् मन्त्रिणः अन्विष्य अन्विष्य प्राप्तवन्तः तम्। झटिति ते तं तस्य पितुः पार्श्वे नीतवन्तः।

मम पुत्रः किमर्थं उन्मत्तः जातः?

हे प्रभो! वयमपि न ज्ञातवन्तः कथमिति।



तर्हि एषा अवस्था कथम् अपगच्छति किमपि आलोचितवन्तः वा?

हे प्रभो! जैमिनि महर्षिः एकः एव अस्य प्रमादात् रक्षयितुं शक्यः इति अस्माकं विश्वासः।



झटिति सर्वे मिलित्वा जैमिनि आश्रमं गतवन्तः। राजा नन्दः महर्षिं प्रणम्य,...

राजन्! भवतः कुमारः भल्लूकं प्रति विश्वास घातं अकरोत्। भल्लूकस्य शापेन एव सः एवम् उन्मत्तः जातः।






धर्मगुप्तं वेङ्कटाचलं नीत्वा तत्र स्नापयति नन्दः। झटिति धर्मगुप्तः साधारण मानवः अभूत्।

हे पितः! मम रक्षकेन भल्लूकेन सह अहं विश्वासघातम् अकरवम्। तदनुगण फलं च मया भुक्तं अन्ते शुभं अभवत्।

सर्वमपि श्रीवेङ्कटेश्वर स्वामिनः करुणया, स्वामि पुष्करणी महिमया च।



कृतज्ञस्य कृतघ्नत्वं प्रदर्शनीयम्।।

आगमिनि सञ्चिकायाम् ...... श्रीनिवासेन ''मातुलः'' इति आहुतः आचार्य कः इति पठिष्यामः।





# दुरदृष्टवान्

- रा.विष्णुचित्तः

‘‘खर्वाटो दिवसेश्वरस्य किरणै स्सन्तापितो मस्तके
वाञ्छन् देश मनातपं विधिवशात्तालस्यमूलङ्गतः।
तत्राप्यस्य मनोफलेन पतता भग्नं स शब्दं शिरः
प्रायो गच्छति यत्र दैव हतकस्तत्रैव यान्त्यापदः।।

अस्मासु अदृष्टवन्तः दुरदृष्टवन्तः इति द्विविध प्रकारकपुरुषाः सन्ति। ये पुण्यं कुर्वन्ति ते अदृष्टं प्राप्नुवन्ति। ये पापं कुर्वन्ति ते दुरदृष्टं प्राप्नुवन्ति। अदृष्टवान् कुत्रापि सुखेन एव जीवनं यापयति। दुरदृष्टवान् कुत्रापि सुखेन जीवनं यापयितुं न शक्नोति।

अयं विषयः अधो विद्यमान वृत्तान्ते सुस्पष्टेन उक्तः।

एकः तस्य ग्रामात् बहिः गच्छन् अस्ति। लोकयानं, धूमशकटं इत्यादीनि यानानि तस्मिन् मार्गे न लभ्यन्ते। तस्मिन् मार्गे अत्युष्णम् आसीत्। तस्य शिरे अपि केशाः न सन्ति। तस्य हस्ते छत्रं अपि नास्ति।

उष्णं इतोऽपि अधिकं जातम्। तस्य शिरं अपि रक्तवर्णं जातम्। सः पुरुषः वृक्षः कुत्र अस्ति इति दृष्टवान्। तत्र दूरे एकं ताली वृक्षं दृष्टवान्।

सः तत्र गत्वा वृक्षस्य अधः उपविश्य अनन्तरं गच्छमीति विचिन्त्य तत्र उपविष्टवान्। तस्य वृक्षस्योपरि तालीफलानि सन्ति। तेषु कानिचन पक्वानि सन्ति। तदभ्यन्तरे पचण्डवायुः आगतः तदा ताली वृक्ष फलं तस्य शिरे पतितम्।

यः दुरदृष्टवान् अस्ति सः यत्रकुत्रापि गच्छति चेदपि तेनसाकं आपदः आगच्छति।

तदर्थं वदन्ति ''देवहतकाः यत्र गच्छन्ति तत्र आपदः भवन्ति'' इत्युक्तम्।





# विशिष्ट बालकः

नाम - यु. भरत् शर्मा
कक्ष्या - नवमी कक्ष्या
जन्मदिनम् - १७.०५.२००६
पितुः नाम - उप्पलधडियं राजीवलोचन शर्मा
मातुः नाम - श्रीमति शैलजा
पाठशाला - भारतीय विद्याभवन्, श्रीवेङ्कटेश्वरविद्यालयः तिरुपति केन्द्रम्।

विशेष प्रतिभा - विविधरंगाः - मृदंग विन्यासम्, गात्रसंगीतम्, तेलुगुसाहित्यम्, शतकरचना, श्लोकपठनम्, एकपात्राभिनयः, चित्रलेखनम्, चदरंगम्, अबाकस्, विद्यारङ्गं, नायकत्वलक्षणेषु प्रदर्शित प्रतिभा - तेलुगु साहित्य परिशोधना, तेलुगु भाषायाः अभिवृद्धिकरणं लक्ष्यम्।

संपादित विजयाः - २००९ एल्.के.जि आरभ्य भगवद्गीतायां पुरस्कारः, २०११ - प्रथम कक्ष्यायां मार्ग् चिन्मय विद्यालयस्य निर्वहणे गोविन्दनामावळि स्पर्धायां प्रथम पुरस्कारः। २०१३ - भारतीय विद्याभवन् संस्थायाः निर्वहणे पुस्तक प्रदर्शनेन द्वितीय कक्ष्यायां बम्मेरपोतन रूपेण एकपात्राभिनयं कृत्वा पुरस्कारं प्राप्तवान्। २०१४ - चिन्मया मिषन् निर्वहणे जिल्लास्थायि भगवद्गीता स्पर्धासु तृतीय पुरस्कारम् प्राप्तवान्। राष्ट्रीय संस्कृत विद्यापीठस्य निर्वहणे भगवद्गीता स्पर्धासु प्रथम पुरस्कारम् लब्धवान्। २०१५ - एस्.ऐ.पि.अबाकस् संस्थायाः विजयवाड पट्टणे निर्वाहिते एस्. ऐ.पि रीजनल् प्राडिजी स्पर्धायां पुरस्कारम् लब्धवान्। २०१८ - रामकृष्ण मिषन् विवेकानन्द जयन्ति उत्सव सन्दर्भे विनायक रजत प्रतिमायाः पुरस्कारः तिरुपति फिलिम् सोसैटी निर्वाहिते एकपात्राभिनय स्पर्धायां दुर्योधन रूपेण नटनां प्रदर्श्य प्रथम पुरस्कारः। तिरुपति सैन्स् सेंटर् निर्वाहिते 'कळाउत्सवं' जिल्ला स्थायि स्पर्धायां मृदंगे प्रतिभां प्रदर्श्य प्रथम पुरस्कारः। संस्कार भारती संस्थायाः अंतर्जाल द्वारा निर्वाहिते राष्ट्रस्थायि पद्य पठन स्पर्धायां प्रथम पुरस्कारं च प्राप्तवान्।

# क्विज्

- एन्. नागेश्वररावः

१. सम्प्रति कति वेदाः वर्तन्ते?

अ. २ | आ. ३

इ. ४ | ई. ५

२. प्राचीनतमः वेदः कः?

अ. अथर्ववेदः | आ.सामवेदः

इ. यजुर्वेदः | ई.ऋग्वेदः

३. वेदत्रयी अस्ति?

अ. ऋग्वेदः, यजुर्वेदः, सामवेदः

आ. सामवेदः, ऋग्वेदः, अथर्ववेदः

इ. ऋग्वेदः, शक्लयजुर्वेदः, अथर्ववेदः

ई. ऋग्वेदः, कृष्णयजुर्वेदः, सामवेदः

४. ऋग्वेदस्य ऋत्विक् वर्तते?

अ. अध्वर्युः | आ. होता

इ. उद्गाता | ई. ब्रह्मा

५. यजुर्वेदस्य मुख्य देवता नाम किम्?

अ. अग्निः | आ. प्रजापतिः

इ. वायुः | ई. इन्द्रः

६. षोडशसंस्कारविधिः कस्मिन् कल्पसूत्रे प्राप्यते?

अ. शुल्बसूत्रे | आ. धर्मसूत्रे

इ. गृह्यसूत्रे | ई. श्रौतसूत्रे

७.विष्णोः निवासस्थानाम् किम्?

अ.पृथिवीलोकः | आ.वैकुण्ठलोकः

इ. अन्तरिक्षलोकः | ई. पाताललोकः

समाधानः १.इ २.ई ३.अ ४.आ ५.इ ६.इ ७.आ

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।





ब्रह्मोत्सवेषु बालबालिकाः

